॥श्रीगणेशाय नमः॥ आकृष्णेनेत्यस्य हिरण्यस्तूप आंगिरस ऋषिः त्रिष्टुप् छंदः सविता देवता सू
र्यप्रीतये जपे विनियोगः॥ अधिदेवतासहित त्र्यंबकमिति वसिष्ठ ऋषिः अनुष्टुप् छंदः त्र्यंबको
देवता त्र्यंबकप्रीतये जपे विलाज्यहोमे विनियोगः॥ प्रत्यधिदेवतासहि अग्निं दूतमिति विरूप ऋषिः
गायत्री छंदः अग्निर्देवता अग्निप्रीतये जपेतिलाज्यहोमे विनियोगः॥ अथ चंद्रः॥ इमं देवा इति व
रुण ऋषिः अर्यमणो देवता यजुः सोमप्रीतये जपेतिलाज्यहोमे विनियोगः॥ श्रीश्चतेत्युत्तरनारा
यण ऋषिः त्रिष्टुप् छंदः नारायणो देवता उप्रीतये जपेति०॥ अप्स्वंतर इति बृहस्पतिर्ऋषिः उष्णिक्
छंदः आपो देवता अपांप्रीतये ति लाज्यहो०॥ अथ भौमः॥ अग्निर्मूर्द्धेति विरूप ऋषिः गायत्री छंदः
अग्निर्देवता भौमप्रीतये जपेतिलाज्यहो०॥ यदक्रंद इति भार्गवो जमदग्निर्दीर्घतमाश्च ऋषिः त्रिष्टु

१छंदः विश्वेदेवा देवता स्कंदप्रीतये जपे तिलाज्यं०।। स्योनापृथिवीति मेधातिथि ऋषिः गायत्री छंदः
पृथिवी देवता पृथिवीप्रीतये जपे तिलाज्यहो०।। अथ बुधः ।। उद्बुध्यस्वेति परमेष्ठी ऋषिः त्रिष्टुप्छंदः अ
ग्निर्देवता बुधप्रीतये तिलाज्यहो०।। अ०दे०।। विष्णोरराटमिति औतथ्य ऋषिः यजुर्विष्णुर्देवता विष्णुप्री
तये जपे तिलाज्यहो०।। प्र०दे०।। इदं विष्णुरिति मेधातिथि ऋषिः गायत्री छंदः विष्णुर्देवता विष्णुप्रीतये ति
लाज्यहो०।। अथ गुरुः ।। बृहस्पते अतीति गृत्समद ऋषिः त्रिष्टुप्छंदः बृहस्पतिर्देवता बृहस्पतिप्रीतये
जपे तिलाज्यहो०।। अ०दे०।। आ ब्रह्मन्निति ब्रह्मा ऋषिः यजुर्ब्रह्मा देवता ब्रह्माप्रीतये जपे तिलाज्यहो०
।।प्र०दे०।। त्रातारमिंद्रमिति गार्ग ऋषि त्रिष्टुप्छंदः इंद्रो देवता इंद्रप्रीतये जपे तिलाज्यहो०।। अथ शुक्रः ११२।
।। अग्ना सरिस्सुत इति प्रजापत्यश्विसरस्वतीन्द्रा ऋषयः जगती छंदः इंद्रो देवता इंद्रप्रीतये जपे०

सजोषा इंद्र इति विश्वामित्र ऋषिः त्रिष्टुप् छंदः इंद्रो देवता इंद्रप्रीतये जपे तिलाज्यहो०॥ अदित्यै रास्ना
सीति दध्यङाथर्वण ऋषिः यजुरिंद्राणी देवता इंद्राणीप्रीतये जपे तिलाज्यहो०॥ अथ शनिः॥ शन्नो
देवीरिति दध्यङाथर्वण ऋषिः गायत्री छंदः आपो देवता शनैश्चरप्रीतये जपे ति०॥ प्रस्मि यम इति भा
स्करो जमदग्निदीर्घतमाश्च ऋषयः त्रिष्टुप् छंदः यमो देवता यमप्रीतये जपे ति०॥ प्रजापते न त्वेतस्य वरु
ण ऋषिः त्रिष्टुप् छंदः प्रजापतिर्देवता प्रजापतिप्रीतये जपे ति०॥ अथ राहुः॥ कया न इति वामदेव ऋ
षिः गायत्री छंदः --- देवता इंद्रप्रीतये जपे० कार्षिरसीति दध्यङाथर्वण ऋषिः अनुष्टुप् छंदः अ
पो देवता कालप्रीतये जपे०॥ नमोस्त्विति देवा ऋषयो नुष्टुप् छंदः सर्पो देवता सर्पानो प्रीतये जपे
०॥ अथ केतुः॥ केतुं कृण्वन्निति मधुच्छंद ऋषिः गायत्री छंदः अग्निर्देवता केतूनां प्रीतये जपे०

।चित्रावसो इति ऋषय ऋषयोतिजगती छंदः रात्रिर्द्देवता चित्रगुप्तप्रीतये॰॥ ब्रह्मजज्ञान
॥१॥ मितिप्रजापतिऋषिः त्रिष्टुप्छंदः ब्रह्मादेवता ब्रह्मप्रीतये॰॥ इतिनवग्रहमंत्राः॥